**४२२। कल्याणी सुभगा दुर्भगा बन्धकी रजकी बलीवर्द्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्र्यनुसृष्ट्यनुदृष्टि कुलटाभ्य इनेयः ।**

( कल्याणी—कुलटाभ्यः ५।।। इनेयः १। ) ।

सौभागिनेयः दौर्भागिनेयः ।

---

द्व्यचोऽनद्याः । नदीवर्जितात् स्त्रीत्यान्तात् द्व्यचः ढ्णेयः स्यात् । दात्तेयः गौपेयः । अनद्या इति किम् ? गोणा गोदावरी गौणः(१) । अवृद्धाभ्यो नदीमानुषीसंज्ञाभ्य इति ढ्णे प्राप्ते(२) ढ्णेय-विधानम् । एतत् (३) ग्रन्थकृता माहेय इत्युदाहरणेन ज्ञापितम् ।

४२२। कल्याणी । कल्याणी च सुभगा च दुर्भगा च बन्धकी च रजकी च बलीवर्दी च ज्येष्ठा च कनिष्ठा च मध्यमा च परस्त्री च अनुसृष्टिश्च अनुदृष्टिश्च कुलटा च ताः ताभ्यः । जरतीस्थाने रजकीति लिपिकरप्रमादः, जिनेन्द्रबुद्धिपादेन जृधोरतृत्येन साधितत्वात् । एभ्यश्चतुर्द्दशभ्यः पूर्व्वस्थितत्र्यन्तनिर्द्दिष्टस्य ण्येयस्य क्तिविपरिणामात् इनेयः स्यात्, षकारणकारं विनैवादेशः (४) । अतएव षित्त्वाटीप् णित्त्वाद्वृः, (५) तेन काल्याणिनेयीत्यादि ।

---

(१) अतएव मूले गाङ्गेय इति आवन्तोदाहरणं न सङ्गच्छते, गङ्गाशब्दस्य नदीवाचकत्वात् ।

(२) शिवादौ "अवृद्धा मानुषीसंज्ञा नदीसंज्ञा मता इह" इत्युक्तेः शिवादित्वात् ष्णे प्राप्ते इत्यर्थः ।

(३) एतत् द्व्यचोऽनद्या इति वार्त्तिकसूत्रोक्तविधानमित्यर्थः ।

(४) एयस्य इनेयः स्यादित्यर्थः ।

(५) स्थानिवत्त्वादेवैतदित्कार्य्यं सिद्ध्यतीति कार्त्तिकेयः ।

इतो लुगिनेयस्य परस्त्रियाः । परस्त्रीशब्दात् परस्य इनेयस्य इतो लुक् स्यात् । पारस्त्रैणेयः, सुभगादित्वात् द्वयोर्वृद्धिः (१)। इह सत्यर्थकुलटाया ग्रहणं, तेन सत्याः कुलटाया अपत्यं कौलटिनेयः, अत्र्यादेराकृतिगणत्वात् ण्णेयः । असत्यास्तु कौलटेरः कौलटेयः । सौभागिनेय इति । सुभगादिर्यथा—

भग जङ्गल हृत् सिन्धु धेनु वलजदोत्तराः (२) ।
वध्योगोऽगारवेणुश्च (३) शतकुम्भ-परस्त्रियौ ॥
इह-सर्व्व-परादिस्तु लोकः (४) प्रयोग इत्यपि ।
असिहत्या चतुर्व्विद्या कुरुपञ्चाल एव च ॥
अधिदेवाधिभूतौ च, षष्ठे राजपुरुषो मतः ।
सर्व्वात् पुरुषभूमौ च तथात्रान्तरहृत् स्मृतः (५) ॥
अन्वादिशतिकोऽपि (६) स्यादनुसंवत्सरो मतः ।
अस्यहेत्यस्यहत्यौ (७) च तथा कुरुकतो मतः ॥
स्यात् पुष्करसदित्येव सूत्रपूर्व्वनड़ः स्मृतः (८) ।
अभिगमोऽनुहोड़श्च प्राग्देशनगरान्तदाः (९) ॥

---

(१) दुर्गादासस्तु परस्त्रीशब्दादिनेये कृते सुभगादिपाठसामर्थ्यात् ययोर्लोप इतीकारस्य लोपाभावे सन्धौ तस्यैव वृद्धिरित्याह ।

(२) भगान्त, जङ्गलान्त, हृदन्त, सिन्ध्वन्त धेन्वन्त, वलजान्त शब्दा इत्यर्थः ।

(३) अङ्गारवेणुरिति पाणिनीये ।

(४) इहलोकः सर्व्वलोकः परलोकश्च इत्यर्थः ।

(५) सर्व्वपुरुषः, सर्व्वभूमिः, अन्तरहृत् इत्यर्थः ।

(६) अनुशतिक इत्यर्थः ।

(७) अस्यहेति, अस्यहत्य इत्यर्थः ।

(८) सूत्रनड़ इत्यर्थः । (९) प्राच्ये देशे वाच्ये नगरान्तशब्दा इत्यर्थः ।

नेन्द्रान्तर्षादिवरुणास्तच्चे चेद्देवता अपि ।
अथ प्रवाहणः ण्येये, ण्येयान्तश्च स इत्यपि (१) ॥
अर्द्धादिपरिमाणश्च भवेदाद्यजनदुयदि ।
अनीश्वरोऽशुचिश्चैवात्तेत्रज्ञाकुशलौ मतौ ।
सुभगादिरिति ख्यातोऽसंख्यस्तन्त्रेषु तान्त्रिकैः ॥

भगादीनि दान्युत्तरदानि येषां ते। सुभगाया अपत्यं सौभागिनेयः। इयोर्द्वयोर्व्रिः। एवं सौभाग्यं दौर्भाग्यम्। महते सौभगाय दीयते, उद्गातादिषु छान्दसः। कुरुजङ्गले भवः कौरुजाङ्गलः। केचित् जङ्गलधेनुवलजान्ताः सुभगादौ न पठ्यन्ते, तन्मते कौरुजङ्गलः वैश्वधेनवः सौवर्णवलज इति। सुहृदो भावः सौहार्दं दौर्हार्द्दम्, इह मुख्यस्य (२) ग्रहणात्। आदिष्टस्य (३) तु सौहृद्यं सौहृदमिति। सुहृद इदं सौहार्दं। शक्तप्रधानः सिन्धुः, मध्यपदलोपात् शक्तुसिन्धुः, तत्र भवः शाक्तुसैन्धवः। सिन्धुशब्दः कच्छादिषु पठ्यते, तेन तदन्तविधिरपि णः। वैश्वधैनवं समूहे, आधेनवम्। सौवर्णवालजम्। वध्योगशब्दो विदादिस्तस्यापत्यं ट्टः वाध्योगः, अनन्तरापत्ये वाध्योगिः। अगारवेणुनामा कश्चित् तस्यापत्यम् आगारवैणवः, एवं शातकौम्भम्। परस्त्रिया अपत्यं पारस्त्रैणेयः, ण्येयस्य इनेयः। इहलोके भव ऐहलौकिकः, लोकोत्तरादिति

---

(१) ण्येये परे प्रवाहणशब्दः सुभगादिः, ण्येयान्तः स प्रावाहणेयशब्दोऽपि इति एवं, सुभगादिरित्यर्थः। प्रावाहणेयशब्दस्य सुभगादिपाठफलं परत्र स्फुटीभविष्यति।

(२) अनादिष्टस्य हृच्छब्दस्येत्यर्थः।

(३) हृदयशब्दस्यामजातस्येत्यर्थः।

ष्णिकः। सर्व्वलोके विदितः सार्व्वलौकिकः, परलोके भवः पारलौकिकः। प्रयोगे भवः प्रायोगिकः, अध्यात्मादित्वात् ष्णिकः। असिहत्यायां भवः आसिहात्यः। चतस्रो विद्याः चतुर्विद्याः चतुर्विद्या एव चातुर्वैद्यं, चतुर्वर्णादित्वात् ष्ण्यः। परे तु विद्यास्थाने वेदमाहुः। कुरुपञ्चाले भवः कौरुपाञ्चालः। अधिदेवे अधिभूते भवम् आधिदैविकम् आधिभौतिकम्, अध्यात्मादित्वात् ष्णिकः। राजपुरुषस्य भावः, ब्राह्मणादित्वात् ष्णत्रः, राजपौरुष्यम्। ष्णत्र किं? राजपुरुषस्यापत्यं राजपुरुषायणिः। सर्व्वपुरुषस्येदं सार्व्वपौरुषं, सर्व्वभूमेर्निमित्तम् ईश्वरः संयोग उत्पातो विदितो वा सार्व्वभौमः। अन्तरहतोऽपत्यम् आन्तरहातिः। अनुशतिकस्येदम् आनुशातिकम्। अनुसंवत्सरेण दीयते आनुसांवत्सरिकम्। अस्यहेतिः प्रयोजनमस्य आस्यहैतिकः, गणपाठात् ष्यलुक्। अस्य हत्येऽभियुक्तः आस्यहात्यः ष्णः। अत्र परेकदेशिनः अस्यहेति-अस्यहत्यौ शब्दौ न पठन्ति। अस्यहत्यशब्दोऽध्याये वर्त्तते। कुरुकतस्यापत्यं कौरुकात्यः, गर्गादित्वात् ष्णत्रः। पुष्करसदोऽपत्यं पौष्करसादिः, बाह्वादित्वात् ष्णिः। सूत्रपूर्व्वेति—सूत्रं पूर्व्वं यस्य, स चासौ नड़श्चेति सूत्रनड़ः, तस्यापत्यं सौत्रनाड़िः। अभिगममृच्छति आभिगामिको गुणः। अनुह्रोड़ेन पठति आनुह्रौड़िकः। प्राग्देशेति—नगररूपमन्तदं येषां ते प्राग्देशे वर्त्तमानाश्चेत् सुभगादयः (१)। पुण्ड्रनगरे भवः

(१) येषां शब्दानामन्ते नगरशब्दोऽस्ति तादृशशब्दा यदि प्राचां देशनामानि भवन्ति, तदा ते सुभगादय इत्यर्थः।

पौण्ड्रनागरः सौह्मनागरः । प्राग्देश इति किं ? मद्रनगरे भवः माद्रनगरः । नेन्द्रान्त इति—इन्द्रोऽन्तो यस्य स इन्द्रान्तः, घं आदिर्यस्य स घांदिः, घांदिश्चासौ वरुणश्चेति घांदिवरुणः, इन्द्रान्तश्च घांदिवरुणश्च, तौ न विद्येते यासु ताः, तच्चे इति—तच्छब्देन देवतोच्यते, तासाञ्चः द्वन्द्वः तस्मिन् । तथाच देवतानां चे सति उक्तलक्षणदेवतावाचकशब्दाः सुभगादौ पठ्यन्ते । तेन अग्निश्च मरुच्च, तौ देवते अस्य, आग्निमारुतं कर्म्म क्रियते । यो देवताद्वन्द्वः सूक्तसम्बन्धी हविःसम्बन्धी वा तत्रैवायं विधिः । इह तु न भवति—स्कान्दविशाखः, ब्राह्मप्रजापत्यम् । नेन्द्रान्तघांदिवरुणा इति किं ? सौमेन्द्रम्, ऐन्द्रावरुणं (१) हविः । इह तु स्यादेव—ऐन्द्राग्नम् आग्नीवारुणम् (२) । अथ प्रवाहण इति—अथानन्तरं प्रवाहणशब्दोऽत्रशादिषु पठ्यते, ण्येय एव तस्य ग्रहणं, तेन प्रवाहणस्यापत्यं प्रावाहणेयः, तस्यापत्यं युवा प्रावाहणेयिः । एतदादिसर्व्वं (३) सुपञ्चालादावपि पठ्यन्ते । तेन पूर्व्वंदस्य त्रि-विकल्पः, प्रवाहणेयः प्रवाहणेयिः । अर्द्धादीति—आदिश्चासौ अच्चेति आद्यच्, न अत् अनत्, आद्यच् अनत् यस्य तत्, परिमाणविशेषणम् । तथाच अकारभिन्नाद्यच् अर्द्धादि परिमाणं सुभगादौ पठ्यते । अर्द्धद्रोणेन क्रीतम् आर्द्धद्रौणिकम्, आर्द्धकौड़विकम् । अनदिति किम् ? अर्द्धप्रस्थेन क्रीतम् आर्द्धप्रस्थिकम् ।

---

(१) अत्र अवायुदेवतार्थस्येति इन्द्रशब्दस्य ङा, तेनैव दीर्घादित्यम् ।

(२) अत्र अग्नेर्ङी सोमवरुणयोरिति ङी ।

(३) प्रवाहणाद्यकुशलान्ताः शब्दाः ।

आर्द्धप्रास्थिकम् इति कश्चित्। सुपञ्चालादित्वात् अर्द्धद्रौणिकम्, अर्द्धकौड़विकम्। एवम् आनैश्वर्य्यम् अनैश्वर्य्यम्, आशौचम् अशौचम्, आचैतन्यम् अचैतन्यम्, आकौशलम् अकौशलम्, आनैपुणम् अनैपुणम् इत्यादि। असंख्यः सुभगादिः तन्त्रे तान्त्रिकैरुक्तः, तेन उदकशुद्धस्यापत्यम् औदकशौद्धिरित्यादि। प्रसङ्गसङ्गत्या (१) साहित्येन (२) सुपञ्चालादिरिह निरूप्यते।

सुसर्व्वार्द्धाज्जनपदा, अथामद्रा दिशश्च (३) ते।
प्राग्ग्रामनगरा दिग्भ्योऽवयवाद्दतुवाचिनः॥
संवत्सरस्तु संख्यादिः, संख्या संख्यादिरेव च।
अमानपरिमाणश्च संख्यादि चेदनामनि॥
अभविष्यति संख्यादि वर्षं, प्रोष्ठपदास्तु भे।
अथ प्रवाहणः णेये णेयान्तश्च स इत्यपि॥
अर्द्धादि परिमाणश्च भवेदाद्यजनद्यदि।
अनीश्वरोऽशुचिश्चैवाचैतन्याऽकुशलौ मतौ॥
अनिपुणश्च, केऽप्यत्रायथातथा-यथापुरौ।
सुपञ्चालादयश्चैते कथ्यन्ते कोविदोत्तमैः॥

सु सर्व्व अर्द्ध इत्येतेभ्यो जनपदाः सुपञ्चालादौ पठिताः, तेन सुपञ्चाले भवः सुपाञ्चालकः, एवं सर्व्वपाञ्चालकः। अथानन्तरं ते जनपदा मद्रभिन्ना दिक्पूर्व्वाश्चेद्भवन्ति तदा सुपञ्चालादौ

---

(१) सुभगादिगणव्याख्याने सुपञ्चालादिगणोल्लेखेनेत्यर्थः।

(२) सूत्रे सुभग सुपञ्चालाद्योरित्येकत्र पाठेनेत्यर्थः।

(३) दिश इति पञ्चम्यन्तं, तेन दिग्वाचकशब्देभ्यः परवर्त्तिन इत्यर्थः।

पठ्यन्ते । यथा पूर्व्वपाञ्चालक उत्तरपाञ्चालकः दक्षिणपाञ्चालकः । अमद्रा इति किं ? पौर्व्वमद्रः, आपरमद्रः । दिग्वाचकेभ्यः प्राग्देशवर्त्तिग्रामनगरवाचकाः सुपञ्चालादौ । यथा पूर्व्वा चासौ इषुकामशमी चेति, तत्र भवः पूर्व्वेषुकामशमः पूर्व्वकार्ष्णमृत्तिकः । नगराणां तावत्—पूर्व्वस्मिन् पाटलिपुत्रे भवः पूर्व्वपाटलिपुत्रकः पूर्व्वकान्यकुब्जः । नगराणां ग्रामग्रहणेनैव सिद्धे भेदेन यत् उभयोरुपादानं तत् सम्बन्धभेदप्रतिपत्त्यर्थम् (१)। तथाच दिक्पूर्व्वसमुदायं पूर्व्वेषुकामशम्यादि ग्रामनामधेयम्, इह तु दिग्वाचकं विनैव पाटलिपुत्त्रादिशब्दो नगरमाह । पूर्व्वत्र ग्रामवाचकसमुदायस्य दिक्पूर्व्वावयवादुत्तरस्य त्रिः । इह तु दिग्वाचकान्नगरस्योत्तरस्य त्रिरिति । अवयवादिति—ऋतुशब्दस्य समभिव्याहारात् ऋत्ववयववाचिनः पूर्व्वदात् ऋतवः सुपञ्चालादौ पठ्यन्ते। यथा-पूर्व्वं वर्षाणां (२) पूर्व्ववर्षास्तत्र भवः पूर्व्ववार्षिकः, पूर्व्वहैमन्तः । अवयवादिति किं ? पूर्व्वासु (३) वर्षासु भवः पौर्व्ववार्षिकः । संख्यापूर्व्वसंवत्सरः सुपञ्चालादौ पठ्यते । यथा द्वौ संवत्सरौ व्याप्याधीष्टो भृतो भूतो भावी (४) वा द्विसांवत्सरिकः ।

(१) दिग्वाचकशब्दैः सह सम्बन्धेन यो भेदस्तस्य प्रतिपत्तिनिमित्तमित्यर्थः ।

(२) वर्षाणां पूर्व्वभाग इत्यर्थः ।

(३) अतीतास्वित्यर्थः ।

(४) अधीष्टः सत्कृत्य व्यापारितः । भृतो वेतनेन क्रीतः । भूतः स्वसत्तया व्याप्तकालः । भावी तादृश एवानागतकाल इति सिद्धान्तकौमुदी । मासमधीष्टोऽध्यापक इत्युदाहरणे काशिका च (५ । १ । ८०) "ननु अध्येषणं भरणं च मुहूर्त्तं क्रियते, तेन कथं मासो व्याप्यते ? अध्येषणभरणे क्रियार्थे । तत्र फलभूतया क्रियया मासो व्याप्यमानस्ताभ्यामेव व्याप्त इत्युच्यते" ।

ापूर्व्वसंख्यापि सुपञ्चालादौ, यथा—द्वे षष्टी व्याप्याधीष्टो भृतो
। भावी वा द्विषाष्टिकः, द्विसाप्ततिकः। द्विषष्ठ्यादिशब्दाः
ासु वर्त्तमानाः कालाधिकारीय-त्यमुत्पादयन्ति (१)। संख्यादि
वर्ज्जितं परिमाणमसंज्ञायां सुपञ्चालादौ पठ्यते। यथा—द्वौ
वौ मानमस्य द्विकौड़विकः, द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौ-
कम्। अनामनि इति किं? पाञ्चलोहितिकः पाञ्चकपालिकः।
ान इति किं? द्वाभ्यां शानाभ्यां क्रीतं द्वैशानम्। अत्र केचित्
कुलिजस्य ग्रहणं, तेन द्विकौलिजिकं द्वैकुलिजिकमित्याहुः।
विष्यति संख्यादि वर्षं सुपञ्चालादौ पठ्यते। द्वे वर्षे व्याप्या-
ो भृतो भूतो वा द्विवार्षिकः त्रिवार्षिकः। भविष्यति तु
ण वर्षाणि व्याप्य भावी, त्रैवर्षिकः। तथाच—

यस्य त्रैवर्षिकं (२) धान्यं निहितं भृत्यवृत्तये।
अधिकं वापि विद्येत स सोमं पातुमर्हति॥ इति महावृत्तिः।

---

(१) कालाधिकारे यः प्रत्ययो विहित एभ्यः स एव स्यात्। अतएव ढघेकादि-
टीकायां "कालेभ्य" इति वक्ष्यमाणवार्त्तिकेन ण्विकः।

(२) वर्षस्याभविष्यति ७।३।१६। इति पाणिनिः। संख्याया उत्तरस्य
स्याचामादेरचो वृद्धिर्भवति। द्विवर्षे अधीष्टो भृतो भूतो वा द्विवार्षिकः।
र्षिकः। अभविष्यतीति किम्? यस्य त्रैवर्षिकं धान्यं निहितं भृत्यवृत्तये।
कं वापि विद्येत स सोमं पातुमर्हति। त्रीणि वर्षाणि भावीति त्रैवर्षिकमिति
का।

ाद्धान्तकौमुद्यां तद्धितेषु कालाधिकारे पूर्व्वोक्तसूत्रस्यैषा वृत्तिः "उत्तरपदस्य
स्या"दिति। द्विवार्षिकः। भविष्यति तु द्वैवर्षिक इत्युदाहृतम्।

र्षस्याभविष्यति इति संक्षिप्तसारे सन्धिपादे ४३ सूत्रम्। द्वे वर्षे अधीतो
द्विवार्षिकः। भविष्यति तु द्वे वर्षे भावि द्वैवर्षिकम् इति वृत्तिः। अत्र
चन्द्रः—संख्यावाचकात् परस्य वर्षशब्दस्य तद्धिते णिति परे उत्तरपदस्यादौ

जे इति जातार्थो निर्द्दिश्यते, तत्र यो विहितस्तस्मिन् प्रोष्ठपदाशब्दः सुपद्मादौ पठ्यते। यथा—प्रोष्ठपदा नाम नक्षत्रं, ताभिर्युक्तः काल इत्यर्थे ष्णः, तस्याविशेषे लुप् (१) प्रोष्ठपदा, तत्र जात इत्यर्थे ऋतुनक्षत्रात् ष्णः, प्रोष्ठपादः। ज इति किं? प्रोष्ठपदासु भवः कुशलो वा इत्यर्थे ष्णे प्रौष्ठपदः। प्रोष्ठपदा इति निर्द्देशात् तत्पर्य्याय-भाद्रपदाशब्दस्यापि ग्रहणं, तेन भाद्रपादः, अजे तु भाद्रपद इति। अथ प्रवाहणः ष्णेय इत्यादिप्रयोगाः प्रदर्शिताः। केऽपीत्यादि आहुरिति शेषः, तेन अयाथातथ्यं अयाथापुर्य्यं, परमते तु आयथातथ्यम् आयथापुर्य्यमित्यपि।

---

वृद्धिर्भवति. अभविष्यदर्थे चेत्तद्धितो विहितः। द्विवार्षिक इति तु पूर्व्ववत् टिकण्

• * यस्य त्रैवर्षिकं धान्यं स सोमं पातुमर्हतीति भाव्यर्थेऽत्र तद्धितः।

मुद्रितस्य कस्यचित् सुपद्मव्याकरणपुस्तकस्य वृद्धिप्रकरणे "दिशः परस्यामद्राणा"मिति १० सूत्रस्य वृत्तौ द्वैवार्षिकं भक्तं, त्रैवार्षिकं धान्यमिति, तथाविधस्य कस्यचित् कलाप-व्याकरण-पुस्तकस्य च चतुष्टयवृत्तौ "वृद्धिरादौ सणे" इति ४३२ सूत्रस्य टीकायां भाविन्यर्थे तु द्वे वर्षे भावि द्वैवार्षिकमिति लिपिकरप्रमादः, अन्यथा अभविष्यदर्थे संख्यादिवर्षशब्दस्योत्तरपदवृद्धिं नियम्य भविष्यदर्थक-प्रत्युदाहरणे पुनस्तस्यैवोत्तरपदस्य वृद्धेः सर्व्वथैवासङ्गतेः, काशिका सिद्धान्तकौमुदी संक्षिप्तसार-मुग्धबोधटीकाकार-कृष्णनाथन्यायपञ्चानन-कृतवृहन्मुग्धबोधमतविरुद्धत्वाच्च।

यस्य त्रैवर्षिकं धान्यमिति श्लोकस्तु ब्रह्मवैवर्त्तपुराणे षष्टितमाध्याये श्रीकृष्णजन्मखण्डे नारदं प्रति नारायणवाक्ये यस्य त्रैवार्षिकं धान्यं निहितं भृतिसिद्धये इति कृत्वा पठितः, विद्यासागरेण च उत्तरचरितस्य प्रथमाङ्के सोमपीतीत्यस्य व्याख्यायां तथैवोद्धृतः पाठः। एवं मनुसंहितायां एकादशाध्याये ७म श्लोके "यस्य त्रैवार्षिकं भक्तं पर्य्याप्तं भृत्यवृत्तये" इति पाठो दृश्यते। अतोऽत्र यद्रहस्यं तत्सुधीभिश्चिन्त्यमिति।

(१) टषे कादित्यस्य टीकायां "अविशेषे लुबि"ति वार्त्तिकसूत्रं द्रष्टव्यम्।

## ४२३ । क्षुद्रागोधाभ्यो वैरारौ ।

( क्षुद्रा-गोधाभ्यः ५।।।, वा ।१।, एरारौ १॥ ) ।

नाटेरः नाटेयः, गौधारः गौधेरः गौधेयः ।

गार्ग्यः वात्स्यः जामदग्न्यः पाराशर्य्यः ।

---

४२३ । क्षुद्रा । क्षुद्राश्च गोधाश्च तास्ताभ्यः । बहुनिर्द्देशो गणार्थः । एयस्य एरविधानसामर्थ्यात् वा ण्येयस्य स्थितिः । क्षुद्रादिभ्य एयस्य एरो वा स्यात् । क्षुद्रादयस्त्वङ्गहीनाः शीलहीनाः सह गोधया । गोधादिभ्य एयस्य आरो नित्यं स्यात्, वा शब्दस्य व्यवस्थया ।

गोधादयस्तु---गोधा जड़ो मृगी चैव पण्डः काकी च मूषिका ।

नाटेर इति—नट्या अपत्यम् इति वाक्यं, पक्षे नाटेयः । एवं यदा कुलटाशब्दोऽसतीवाचकस्तदा कौलटेरः कौलटेयः, शीलहीनत्वात् । अङ्गहीनायास्तु काणाया अपत्यं काणेरः काणेयः । एवं कौञ्जेरः कौञ्जेय इत्यादि । गौधार इति—गोधाया अपत्यम् इति वाक्यं, क्षुद्रादिपाठात् गौधेरः, अत्रादौ पृथक् पाठात् गौधेय इति । जड़स्यापत्यं जाड़ारः, मृग्या अपत्यं मार्गारः, पण्डस्यापत्यं पाण्डारः, काक्या अपत्यं काकारः, मूषिकाया अपत्यं मौषिकारः, बाह्वादित्वात् मौषिकिः ।

चटकाभ्यामैरो, लुक् तु स्त्रियाम् । चटकाच्च चटकायाश्च परस्य ण्येयस्य ऐरः स्यात् । स्त्र्यपत्ये ऐरस्य लुक् । अतएव

चटकात् ष्णेय: (१)। चटकस्य चटकाया वा अपत्यं चाटकैर:। स्त्रियान्तु चटकस्य चटकाया वा अपत्यं स्त्री चटका।

गार्ग्य इत्यादि—ननु गर्गादि-नड़ादिभ्यां गोत्र एव ष्णञ-ष्णायनौ, तत् कथमपत्यसामान्ये विहित (२) इति चेत् सत्यं, जामदग्न्य: पाराशर्य्य इत्युभाभ्याम् अनन्तरे ष्णञस्य, द्रौणायन इत्यत्र ष्णायनस्य च दर्शनात् सामान्येनोक्तम्, अन्यत्रान्तर एवेति भाव: (३)। गर्गस्य गोत्रापत्यं गार्ग्य:, अनन्तरे तु अत: ष्णि: गार्गिरित्यादि।

गर्गादिर्यथा—

गर्गो वत्साकृती (४) रेभो व्याघ्रपादवट: (५) शठ:।
अजो विलस्त्यग्निवेशौ (६) जरमाणो धनञ्जय:॥
वृक्षो विश्वावसु: शङ्खो वर्म्म-धूम-पुलस्तय: (७)।
संस्कृतिर्वेदभृद्वीनयोगोवाजस्त्वसे (८) मधु:॥
विप्रेऽथ लोहितो मण्डुर्जिगीषुर्गुह्लुर्लतु:।
कपि-बोध-वतण्डास्त्वाङ्गिरसेऽप्यथ कौशिके॥

---

(१) स्तने चटका च चटकश्च ताभ्यामित्येकशेष:। अश्वादिगणे चटकशब्दस्यानुक्तत्वेऽपि इह स्त्रकरणादेव तस्मात् ष्णेय इत्यर्थ:।

(२) ष्णञ इति शेष:।

(३) अन्तरे व्यवहिते पौत्रादौ गोत्रे वाच्ये इत्यर्थ:।

(४) वत्स, आकृति।

(५) व्याघ्रपाद्, अवट।

(६) विलस्ति, अग्निवेश।

(७) वर्म्मन्, पुलस्ति।

(८) संस्कृति, वेदभृत् वीनयोग, असमासे वाजशब्द:।

बभ्रु-शंसित-सून्विन्द्र(१)-मनायी-मनु-कच्छपाः।
मन्तुः शङ्कुः कतस्तण्डस्तरुचौ (२) रुच-मङ्कु च।
तनुः कुरुकतश्चैव तलुच-शकलेन्द्रह्नः (३)॥
कण्वोऽगस्ति-विरोहितौ वृषरङ्गपूर्व्वौ गणः (४) पिप्पलूः
कृष्णौ भण्डिल-शण्डिलौ च चिकितौ दल्भस्तितिक्षौ(५) भिषक्।
गोकक्षाररकावुलूक-मुषलौ स्थूरा सुलाभ्येकलू (६)
र्जातौ मन्त्रित भिष्णुजाऽश्मरथ गोलुन्दं तथा कुण्डिनौ॥
अनडुद्यज्ञवल्कौ च पर्णवल्कः पराशरः।
जतूकर्णः शर्कराक्षः पूतिमाषश्च पिङ्गलः।
मुद्गलो बृहदग्निश्च कुटीभृज्जमदग्नि च।
लोहितादिश्च कण्वादिर्गर्गादौ परिकीर्त्तितः॥

गर्गस्याऽन्तरापत्यमिति वाक्यं, ण्य यथोर्लोप इति अकारलोपे त्रिः। स्त्रियां षित्त्वादीपि गार्गी, ष्णायनपक्षे गार्ग्यायणी। एवं सर्व्वत्रोहनीयम्। इह पुलस्तिशब्दपाठात् ण्ये पुलस्त्यः। पुलस्त्य-शब्दस्य तु ण्ये पौलस्त्या इति। यद्यपि वेदभृच्छब्दाट्टषिणि कृते पश्चात् स्वार्थे ष्णेय वैदभृत्य इति सिध्यति, तथापि ण्ये लुकि वेदभृत इति सिद्धार्थः पाठः, तत्र तु वैदभृत्या इति। वाजशब्दोऽसे गर्गादिः, तेन वाजस्यापत्यं वाज्यः; से तु

---

(१) सून्, इन्द्र।
(२) कत, तण्ड, तरुच।
(३) शकल, इन्द्रह्न।
(४) वृषगण, रङ्गगण।
(५) दलभ, तितिक्ष।
(६) गोकक्ष, अररक, उलूक, मुषल, स्थूरा, सुलाभिनु, एकलू।

## ४२४ । ओदौतोऽञ्वत् तक्तद्य-क्यङ्गाः ।

( ओत्-ओतः ५।, अच्वत् ।१।, तक्तद्य-क्य-ङ्गाः-१।।। ) ।

ओदौद्भ्यां परस्तसंज्ञः क्तसंज्ञकश्च यः क्यङ्गौ च अञ्वत् स्यात् ।

बाभ्रव्यः । नाड़ायनः गार्ग्यायणः दाचायणी । पैतृष्वस्रीयः मातृष्वस्रीयः । रैवतिकः आश्वपालिकः । यादवः आङ्गिरसः ।

---

सौवाजिः । एतेनान्येषां सेऽपि सौगार्ग्य इत्यादि । माधव्यो विप्रः, अन्यत्र माधवः ।

शकलान्ताल्लोहितादेः (१) ष्णास्य स्त्रियां ष्णायन्नित्यम् । तेन लौहित्यायनीत्यादि । कपेरन्तरापत्यं काप्यः, स्त्रियां काप्यायनी। एवं बौध्यः बौध्यायनी, वातण्ड्यः वातण्ड्यायनी । अनाङ्गिरसे तु कापेयः बौधिः, वातण्डः शिवादित्वात् ष्णः । अनाङ्गिरसेऽपि गर्गादित्वात् ष्ण्यः, वातण्ड्यः, स्त्रियां वातण्ड्यायनी वातण्डीति कश्चित् ।

४२४ । ओदौ । ओच्च औच्च तत्तस्मात्, अजिव अञ्वत्, तश्च क्तश्च तौ तक्तौ, त-क्तयोर्यः तक्तद्यः, तक्तद्यश्च क्यश्च ङ्यश्च ते । बाभ्रव्य इति—बभ्रोरपत्यं ष्ण्यः, न्वोर्लौपीताविति उवर्णस्यौकारः, यस्याञ्वद्भावात् यलायवायाव इत्यवादेशः । कौशिक एवाभिधानम्, अन्यत्र बाभ्रवः । तनुस्थाने तन्तुरिति पठत्यपरः । कतो मुनिविशेषः, तस्यान्तरापत्यं कात्यः, स्त्रियां कात्यायनी ।

---

(१) गर्गादौ लोहितशब्दादारभ्य शकलशब्दपर्य्यन्तेभ्यः शब्देभ्य इत्यर्थः ।

कण्वादेः प्रयोजनमग्रे वक्ष्यते। गर्गादेराकृतिगणत्वात् वामरथशब्दः कण्वादौ ज्ञातव्यः। वामरथस्यापत्यं वामरथ्यः, द्वे तु वामरथ्यौ, बहुषु वामरथाः, स्त्रियां वामरथ्यायनी वामरथी, वामरथ्यस्यापत्यं युवा वामरथ्यायनः, वामरथ्यस्य छात्रा वामरथाः। सङ्घाङ्कघोषलक्षणानि वामरथानि, (१) वामरथशब्दादगोत्रेऽप्युपचारात् (२)।

कुर्व्वादेरपिङ्गोराजश्वशुरात्त्वनिश्मनोस्तु संख। कुर्व्वादेर्गोत्रेऽगोत्रे च ण्योऽपित् स्यात्, ण्य इत्यर्थः, गोराजश्वशुरेभ्यस्तु अनित् इत्शून्यो, य इत्यर्थः, मनोस्तु ययोगे संख, न इत्। कुरोरपत्यं कौरव्यः कौरव्यौ कौरव्या इत्यादि, स्त्रियां कौरव्यायणी कौरव्या। केचित् कौरव्यायणीति नित्यमाहुः। एवं लाक्षण्यः लाक्षण्यौ लाक्षण्याः। स्त्रियां लाक्षण्या इत्यादि।

कुर्व्वादिर्यथा—

कुरु कवि गर्गर-गणिका-कूटं, शकल शलाका सत्यंकारम्।
शाकः शुभ्रो मति-मञ्जूषं, तक्षा लक्षण-वड़भीकारम्।
एरका-सुर-कैशोरि रथकारस्य पट्टिका।
पिण्डीमूलेन्द्रजाली वाक् शकम्भूरविमारकः (३)।

---

(१) वामरथस्यापत्यं वामरथ्यस्तस्येमानि (संघाङ्कघोषलक्षणानि) इति वामरथानि। अत्र वामरथ्यशब्दात् संघादिषु वाच्येषु "ण्णि ण्णत्र-टात् संघाङ्कघोषलक्षणे" इति वक्ष्यमाणवार्त्तिकेन इदमर्थे ण्णः, तस्मिन् अपत्यण्णत्रस्य लोपे वामरथानीति। वार्त्तिकन्तु विकारसंघेति सूत्रस्य टीकाशेषे द्रष्टव्यम्।

(२) ननु वामरथशब्दस्य गर्गादित्वात् कथमपत्यसामान्ये ण्णत्र इत्यत आह वामरथशब्दादिति। उपचारात्—गोत्रत्वारोपादित्यर्थः।

(३) पिण्डीमूल, इन्द्रजालि, वाच्, शकम्भू. अविमारक।

एकजित् श्यावनायश्च पितृमत्-पथिकारिणौ ।
हन्ता भर्त्ता शूर्पणायो दामोष्णीषिरिनस्तथा (१) ।
भर्वः श्यावरथः श्यावपुत्रः सेनान्तदा मताः ।
कारवः, क्षत्रिये सम्राट्, केशिन्याः केशिनो भवेत् ।
ण्ये भ्रातुर्वम् च तस्यैव (२) वेणः केनचिदीरितः ।
यमादित्यादितिश्चैवाऽपश्वाद्यादिपतिर्दितिः (३) ।

पश्वादिर्यथा—

पश्वश्व-कुल-राष्ट्रार्थ-गण-वास्तु-धनं वसु ।
विद्या-शत-नर-क्षेत्रं प्राण-धान्य-सभा-जगत् ॥

रथकारशब्दोऽत्र जातिवचनः, शिल्पिवचनस्तु कारुत्वेनैव प्राप्तः । शके भवतीति शकम्भूरिह पाठबलान्मकारागमः । हारिषेण्यः वैष्वक्सेन्यः, बाह्वादित्वात् हारिषेणिः वैष्वक्सेनिः । एवं तान्तवाय्यः तान्तवायिरित्यादि । सम्राजोऽपत्यं साम्राज्यः, क्षत्रियः । अन्यत्र बाह्वादेराकृतिगणत्वात् साम्राजिः । केशिन्या अपत्यं कैशिन्यः, ण्ये केशिनादेशः, अन्यथा पुंवद्भावे (४) कैश्यः स्यात् । भ्रातुरपत्यं भ्रातृव्यः (५) ण्यस्य वम्, पितृष्वस्रादित्वात् भ्रात्रीयः । कस्य-

(१) दामोष्णीषि, इन ।

(२) भ्रातृशब्दात् ण्ये सति तस्य ण्यस्यैव वम् भवति, स इत् ।

(३) यम, आदित्य, अदिति, पश्वादिगण-भिन्नशब्दपूर्व्वक-पतिशब्द, दिति ।

(४) पुंवद्भाववार्त्तिकसूत्रं ३२८ सूत्रस्य टीकायां द्रष्टव्यम् ।

(५) भ्रातृव्यौ भ्रातृज-द्विषौ इत्यमरः । भ्रातुः शत्रुरपत्यञ्च भ्रातृव्यौ । अत्र द्विट्पक्षे रूढ़िकल्पनं, तेन सामान्यद्विडेव न तु भ्रातृद्विट् । भ्रातृपुत्रः शत्रुपुत्रश्च भ्रातृव्याविति महेश्वरः । तन्मते भ्रातृशब्देन भ्राता शत्रुश्चेति मन्तव्यम्—इति प्रयोगरत्नमालाटीका ।

चिन्मते वेणशब्दस्य कुर्व्वादित्वात् वैण्यः, तथा च—वैण्यं पृथुं हैहय-मर्ज्जुनञ्च इति। वेणाच्छन्दसीति पाणिनिसूत्राच्छान्दसमिदम्। यमस्यापत्यं याम्यः। आदित्यस्यापत्यम् आदित्यः, ण्ये ण्यलोपः(१) अदितेरपत्यम् आदित्यः। प्रजापतेरपत्यं प्राजापत्यः, एवं वैश्वपत्यः। दितेरपत्यं दैत्यः। पश्वाद्यादिपतेस्तु—पाशुपतः जागत्पत इति कुर्व्वादि। गोरपत्यं गव्यः। राज्ञोऽपत्यं राजन्यः, क्षत्रियेऽभिधा-नम्, अन्यत्र राजनः.मन्वर्ज्जेत्यादिना नियमेन न नलोपः, हनषन् इति नियमान्न उङ्लोपः। श्वशुरस्यापत्यं श्वशुर्य्यः, संज्ञायां बाह्वा-दित्वात् श्वाशुरिः। मनोरपत्यं मनुष्यः, ये सन्, म इत्। नाड़ायन इति—नड़स्यान्तरापत्यम् इति वाक्यम्।

नड़ादिर्यथा—

नड़ भण्डित रोहिण शङ्ख पुटं
पद (२) काण चरं गिरि चक्र कुटम्।
बिद काश वनं कुल धूम जलं
किर चित्र सुरं खड़ लोह नरम्॥
भड़िलो भड़लो भड़ितः प्रकृति-(३)
श्वपलो नमकः खदिरो मिमतः।
चरकः शकटः शलभो वदरः
स्थिरकः खरपः सुमनोऽज-जनाः॥

---

(१) अदितिशब्दस्य कुर्व्वादौ पाठात् ण्ये आदित्यः, आदित्यशब्दस्यापि तत्र पाठात् पुनर्ण्ये ययोर्लोप इत्यकारयकारयोर्लोपः।

(२) पाद इति पाणिनीये।

(३) प्रकृतिरित्यत्र प्रकृत इति संक्षिप्तसारे, प्रकृत इति पाणिनीये।

सायक दासक किङ्कर दुर्गं
कातर काखल (१) पिङ्गल धूम्रम् ।
भण्डिल कोशल मुपक विशालम्
आतप चूप(२)मश्व विशम्पम् ॥

ओजः खरप पञ्चाल वामोदश्च धरित्रिणः ।
अश्मा गोमी च गोलाच्च (३) जलन्धर युगन्धराः ॥
कुमारः शिंशपा काव्यो वीचार्हावितिशेतिकौ (४) ।
आनडुह्यार्ज्जुनौ दण्डी श्यामो वाग्मी च सप्त च ॥
इन्द्रामुष्यौ निगुः (५) काश्यो राजन्य तिक पिञ्जराः ।
द्वीपः प्राणो दास मित्र मुञ्जार्क तृण शूद्रकाः ॥
अनुग्रीवः श्रविष्ठा च विश्वानरश्च हंसकः ।
मण्डपाकश्मल(६)स्तम्भ-खर्ज्जूर-चमसश्च ऋटक् ।
ग्रीष्मो हस्ती वैण्य(७)वाप्यौ सुकृत्यः शोण-कामुकौ ।
ब्राह्मणोडुम्बरालोह द्रोण जीवन्त पर्व्वताः ॥
खनाऽश्वलाग्रदण्डं (८) स्यात् शलङ्कुस्तु ह्यकौशिके ।
वाशिष्ठे तु वणो विप्रे कृष्णो जातस्तु पूरुषे ॥

---

(१) कातल इति पाणिनीये ।
(२) पाणिनीये संक्षिप्तसारे च चूप इत्यत्र ह्रस्वउकारो दृश्यते ।
(३) गोलाङ्क इति पाणिनीये ।
(४) वीच, अर्ह, इतिश, इतिक ।
(५) लिगु इति पाणिनीये ।
(६) अकश्मलशब्दः पाणिनीये संक्षिप्तसारे च न दृश्यते ।
(७) वैल्य इति पाणिनीये संक्षिप्तसारे च ।
(८) खन, अश्वल, अग्र, दण्ड ।

दर्भे आग्रायणे भार्गस्तैगर्त्ते शुनकस्तथा।
वात्स्ये ऋषावग्निशर्म्मा स्याच्छरद्वांस्तु भार्गवे॥
भारद्वाजे तु आत्रेयो भरद्वाजः शपस्तथा।
आत्रेयेऽथ ष्णायने च क्रौष्टोरुत्सुक् सदा मतः।
ष्णान्ता ष्णन्ताश्च गोत्रार्था ट्र्यन्ताश्च हरितादयः॥

शिंशपाया अपत्यमित्यर्थे—आदाद्यचो णित्ते शिंशपा-दित्य-वाट्-श्रेयो-दीर्घसत्र-देविकानाम्। शिंशपादीनां णित्ते परे आद्यचः स्थाने त्रि-प्रसङ्गे आत् स्यात्। शांशपायनः (१)। आनडुह्य इति—गर्गादिष्णान्तः। अर्ज्जुनस्यान्तरापत्यम् आर्ज्जुनायनः। बाह्वादित्वादार्ज्जुनिः। एवं साम्रायनः साम्निः, पञ्चानामपत्यं पाञ्चायनः, बाह्वादित्वात् पाञ्चिः। वैण्य इति—वेणो नाम राजर्षिस्तस्यापत्यं वृद्धेकोशलाजादेरिति (२) ण्यङ्, वैण्यस्तस्यापत्यं युवा वैण्यायनः। अतएव ण्य-ट्र्य-क्षत्रियार्षेभ्य इति न लुक्। द्रौणायणोऽश्वत्थामा इति तु पुत्त्वे पौत्त्रत्वोपचारात्। शलङ्कोरन्तरापत्यं शालङ्कायनः ष्णायने उतो लोपः। इदमकौशिके, कौशिके तु बाह्वादिः। वाणायनो वाशिष्ठः, अन्यत्र वाणिः। कार्ष्णायनो विप्रः, अन्यत्र कार्ष्णिः। जातस्यान्तरापत्यं जातायनः पुमान्। पुरुष इति

(१) शिंशपाया विकारः शांशपो दण्ड इत्यपि। दित्यो लाङ्गलं, तं वहतीति दित्यवाट् वृषभः तस्यायं दात्यौहः। दात्यूह इति कात्यायनः। दितिं वहतीति दितिवाट् कश्यपस्तस्माज्जात इत्यर्थे दात्यूह इति कश्चित्। डाउक् इति ख्यातो जलचरपक्षिविशेषः। श्रेयसि भवं श्रायसम्। दीर्घसत्रे भवं दार्घसत्रम्। देविका नदी, तत्र भवं दाविकमुदकं (प्रयोगरत्नमाला १५६६ सू)।

(२) कुञ्जादेरिति ४२८ सूत्रस्य टीका द्रष्टव्या।

किं ? जाताया अन्तरापत्यं जातेयः। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्यस्य ज्ञापकमिदम्। दार्भायणः आग्रायणः (१) अन्यत्र दार्भिः। भार्गायणस्त्रैगर्त्तः (२), अन्यत्र भार्गिः। शौनकायनो वात्स्यः, अन्यत्र शौनकः, विदादित्वात् ट्ञः। आग्निशर्म्मायणः ऋषिः, अन्यत्र बाह्वादित्वात् आग्निशर्म्मिः। शारद्वतायनो भार्गवः, अन्यत्र शारद्वतः, विदादित्वात् ट्ञः। आत्रेयायणो भारद्वाजः, अन्यत्रात्रेयिः। भारद्वाजायनः शापायनश्चात्रेयः, अन्यत्र भारद्वाजः—ऋषि-ष्णः, शापिः—अतः ष्णिः। क्रौष्टोरपत्यं क्रौष्टायनः, उतो लुक् ष्णायने। इदमकौशिक इति कश्चित्। गोत्रविहितष्णान्ता गोत्रविहितष्णान्ताश्च नड़ादौ पठ्यन्ते, तस्मादेव नियमात् यूनि प्रत्ययः। मूले गार्ग्यायण इति गर्गस्यान्तरापत्यं गार्ग्यः, तस्यापत्यं युवा इत्यर्थे ष्णायनः, आति न ष्णस्य लोपः(३)। एवं वात्स्यायन इत्यादि। मूले दाक्षायण इति दक्षस्यान्तरापत्यम् इति दाक्षिस्तस्यापत्यं युवा दाक्षायणः, एवं प्लाक्षायण इत्यादि। स्त्रियां गर्गस्यापत्यं यूनी गार्ग्यायणी दाक्षीति स्त्रियां युव-त्वनिषेधात्। दाक्षायणी तु दक्षस्यापत्यं दाक्षायणः, स्त्रियां षित्त्वादीप्। गोत्रार्थ इति किं ? सोमो देवता अस्य सौम्यस्तस्यापत्यं सौम्यिः। सुतङ्गमस्य निवासः सौतङ्गमिस्तस्यापत्यं सौतङ्गमः, शेष-ष्णः। एवं ट्ञान्ता हरितादयः। हरितस्यान्तरापत्यं हारितः, विदाद्यन्तर्गण-

---

(१) आग्रायणो मुनिभेदः।

(२) त्रिगर्त्तस्य मुनेः पुत्राद्यपत्यं त्रैगर्त्तः।

(३) क्वङ्ग्रचौचेत्यत्र आकारवर्ज्जनात्।

त्वात् ट्रः, तस्यापत्यं युवा हारितायनः । परस्त्रिया अपत्यं(१) पारशवस्तस्यापत्यं युवा पारशवायन इत्यादि ।

पैलादेः (२) ष्णायनस्य लुक् । पैलादेः परस्य ष्णायनस्य यूनि विहितस्य लुक् स्यात् । पीलाया अपत्यं पैलस्तस्यापत्यं युवा पैलः । एवमुदीचोऽपत्यम् औदच्चिस्तस्यापत्यं युवा औदच्चिरित्यादि । पैलादिर्यथा—

पैल औदच्चि-भौलिङ्गि सात्यकामिश्च सात्यकिः ।
औदव्रज्यौदमज्जावौदशुद्धि(३)श्चालङ्कयस्तथा ।
गोपामज्ज्यौदमेघौ च दैवस्थान्यौदगायनी ।
श्वाफल्कावौदन्विती राहृक्षतिस्तैवौज्जिहायनिः ।

पैङ्गलायनि वाल्कायनि पैङ्गायनि वारुणि । ष्णान्तानामेषां "प्राचां ष्णेश्चावैङ्गादे"रित्यनेन लुकि सिद्धे अप्राच्यार्थं पृथगुपादानम् ।

प्राचां ष्णेश्चावैङ्गादेः । प्राचां गोत्रे यः ष्णिस्तदन्तात् यूनि विहितस्य ष्णायनस्य लुक् स्यात्, न तु वैङ्गादेः । पन्नागारस्यान्तरापत्यं पान्नागारिस्तस्यापत्यं युवा पान्नागारिः । वैङ्गादेस्तु

(१) परस्त्रीशब्दस्य परशवादेशः । अत्र गोयीचन्द्रः—अत्र परस्त्रीशब्देन भिन्नजातीया स्त्री वाच्या, रूढश्चायं शब्दः । ब्राह्मणेनोढायाः शूद्राया अपत्यं पारशवः, अन्यत्र तु पारस्त्रैणेयः ।

(२) अत्र वाल्यादेरित्यपि पाठः । बालस्यान्तरापत्यं वालिः तस्यापत्यं युवा वालिरित्युदाहरणञ्च ।

(३) काशिकायां हृहन्मुग्धबोधे च उदबुद्धिरिति पाठो दृश्यते सिद्धान्तकौमुद्यान्तु उदशुद्धिरिति ।

विङ्गस्यान्तरापत्यं वैङ्गिः तस्यापत्यं युवा वैङ्गायनः। धारणस्यान्तरापत्यं धारणिः तस्यापत्यं युवा धारणायन इत्यादि।

वैङ्गयादिर्यथा—

वैङ्गि धारणि वाल्मीकि प्राणाहतिश्च दैवतिः।
तौल्वल्यासुरि-दैवोद्धि पौष्पि-वैल्वकि-वैरकि॥
कारेणुपालि-वैकर्णी कालिङ्ग्याहिंसकौ तथा।
चापेटक्यासिबन्धी पौष्करसादिश्च नैयमिः।
दैवमत्यान्तरहती तथा दैवयजिर्मतः॥

न भरत गोत्राच्च। प्राच्यात् भरतगोत्राच्च यूनि विहितस्य लुक् स्यात्। अर्ज्जुनस्यान्तरापत्यम् आर्ज्जुनिस्तस्यापत्यं युवा आर्ज्जुनायनः। पूर्व्वस्य बाधकोऽयम्।

पैतृष्वस्रेय इत्यादि। पितृष्वसुरपत्यमिति वाक्ये णीयः, णित्वाद्वृिः, स्त्रियां पैतृष्वस्रीया, पैतृस्वस्रीयाभार्य्य (१) इत्यादि। पितृष्वस्रादिर्यथा—

पितुःस्वसा तथा मातुः, स्वसा, भ्रातुरणिट् भवेत्।
कुत्सायां णायनिश्चैव सौवीरगोत्रसम्भवः॥

भ्रातृशब्दात् णीयोऽणित्, तेन भ्रात्रीयभार्य्य इति (२)॥

सौवीरगोत्रसम्भवो णायनिः (३) कुत्सायां पितृष्वस्रादौ पठ्यते, तस्मादपि अणित्सीयः। यमुन्दस्यापत्यं यामुन्दायनिः तस्यापत्यं

(१) अत्र युष्मन्तविकारार्थवर्ज्जणित्तान्तत्वान्न पुंवद्भावः।

(२) अत्र णित्तान्तत्वाभावात् पुंवद्भावः।

(३) सौवीरगोत्रापत्येऽर्थे सम्भूतो यो णायनिप्रत्ययस्तदन्ताः शब्दा इत्यर्थः।

शुवाऽणित्यः, यामुन्दायनीयो जाल्मः, रेवत्यादित्वात् यामुन्दायनिकः । एवं सौयामायनीयः सौयामायनिकः, वार्ष्णायणीयः वार्ष्णायनिकः । तथाच—

यमुन्दश्च सुयामा च वार्ष्णस्तेभ्यः फिञः (१) स्मृताः ।
सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित् स्मरेत् ॥

इति महावृत्तिः ।

द्वौ णीयणिकौ । णित्त्वाभावे पूर्ववत् प्रयोजनम् (२) ।

रैवतिक इति—रेवत्या अपत्यम् इति वाक्यं, ययोरित्यादिना ईकारलोपः वृद्धिश्च, स्त्रियां रैवतिकी । आश्वपालिक इति अश्वं पालयतीति अश्वपालः षण्, तस्यापत्यमिति वाक्यम् ।

रेवत्यादिर्यथा—

रेवत्यश्व-मणि-द्वारपूर्वपालोऽथ कुत्सने (३) ।
गोत्रस्त्रियश्च (४) बाहुल्याद्दृष्टाः सौवीरगोत्रजाः ॥
कर्णग्राह-वृकग्राहौ कुक्कुटाक्षस्तथैव च ।
वृकवञ्ची सवर्णा च परे शिष्टप्रयोगतः ॥

अश्व-मणि-द्वारेभ्यः पालो रेवत्यादौ पठ्यते । जयादित्यस्तु अश्वपाली मणिपाली द्वारपालीति स्त्रीलिङ्गमङ्गीकरोति । न्यासे तु द्वारपालादीनामदन्तनिर्देशः । अथानन्तरं गोत्रविहितत्वात्ताः

(१) पाणिनीये फिञ्प्रत्ययः, तर्कवागीशमते णायनिः ।

(२) पुंवद्भावसिद्धिरित्यर्थः ।

(३) पितुरसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य कुत्सेति काशिका ।

(४) पौत्रप्रभृत्यपत्यं गोत्रं, तथाभूता याः स्त्रियः गोत्रस्त्रियः ।

स्त्रीलिङ्गाः कुत्सायां रेवत्यादौ पठ्यन्ते। यथा—गार्ग्या अपत्यं युवा गार्गिको जाल्मः, ग्लुचुकायन्या अपत्यं युवा ग्लौचुकायनिको जाल्मः, मिमतादित्वात् गार्गः ग्लौचुकायनश्च जाल्मः। गोत्रेति किम्? कारिकेयो जाल्मः। स्त्रियः इति किम्? औपगविः। कुत्सायामिति किम्? गार्गेयो माणवकः (१)। कुत्सन इत्येव, तेन सौवीरगोत्रे ये वृद्धास्तेऽपि कुत्सायां बाहुल्याद्रेवत्यादौ पठ्यन्ते। भगवित्तस्यापत्यं भागवित्तिस्तस्यापत्यं युवा भागवित्तिको जाल्मः, बाहुल्यात् पक्षे यथाप्राप्तं भागवित्तायनो (२) जाल्मः। तृणविन्दोरन्तरापत्यं तार्णविन्दवः तस्यापत्यं युवा तार्णविन्दविकः। आकशापस्यान्तरापत्यम् अश्वादेराकृतिगणत्वात् आकशापेयः, तस्यापत्यं युवा आकशापेयिकः। अन्ये तु अश्वादिपठितत्वात् आकशायनशब्दस्यैव आकशायनेयिको जाल्मः इति वदन्ति, तन्न।

तथाचाहुः—

भागपूर्व्वपदो वित्तिर्द्वितीयस्तार्णविन्दवः।
तृतीयस्त्वाकशापेयो गोत्रात् (३) ठग्बहुलं ततः (४)॥

इति परे।

---

(१) अत्रापि गार्ग्या अपत्यं युवेति वाक्यम्। "मातामह्यादेरुपलक्षणार्थोऽयं प्रयोग इति नास्ति कुत्सा" इति काशिका।

(२) गोत्रण्यन्तानां नडादौ पाठादत्र ष्णायनः।

(३) गोत्रात् गोत्रविहितप्रत्ययान्तात्।

(४) ततस्तस्मात् भागवित्त्यादिशब्दत्रयात्।

४२५ । मन्वर्ज्जान्वर्म्मोक्षस्येनोऽनोऽध्वात्मनो-पत्यष्णोऽविकारष्णाभावकर्म्मय ईने न न-लोपः ।

( मन्वर्ज्जान्वर्म्मोक्षस्येनः ६।, अनः ६।, अध्वात्मनः ६।, अपत्यष्णे ७।, अविकारष्णाभावकर्म्मये ७।, ईने ७।, न ।१।, न-लोपः १। ) ।

---

ठक् ष्णिकः । वृद्धग्रहणमिह स्त्रीनिवृत्त्यर्थम् (१) । सौवीर-गोत्रजा इति किम् ? औपगविर्जाल्मः । कुत्सायामिति किम् ? भागवित्तायनो माणवकः ।

शेषामुदाहरति यादव इति—यदुर्नाम कश्चित्, तस्यान्तरा-पत्यार्थे ष्णः । आङ्गिरस इति—अङ्गिरसोऽपत्यम् इति वाक्यम् (२) । मुनौ तु शिवादित्वात् (३) । एवम् औपगवः माधवः मारीच इत्यादि ।

४२५ । मन् । मनं वर्ज्जयतीति मन्वर्ज्जः, स चासौ अन् चेति मन्वर्ज्जान्, स्यादिन् स्येन्, मन्वर्ज्जान् च वर्म्मा च उक्षा च स्येन् च तत्, मन्वर्ज्जान्वर्म्मोक्षस्येन् तस्य । अध्वा च आत्मा च तत्तस्य । न विकारोऽविकारस्तस्मिन् ष्णः अविकारष्णः, भावश्च कर्म्म च ते भावकर्म्मणी, न भावकर्म्मणी अभावकर्म्मणी,

---

(१) सौवीरगोत्रजा इत्युक्तेरपत्यप्रत्ययान्ताः सौवीरगोत्रोत्पन्नवाचकाः शब्दा गृह्यन्ते । ते चापत्यप्रत्ययान्तत्वादादिस्वरवृद्धौ वृद्धसंज्ञका भवन्ति, तथापि वृद्ध-ग्रहणं, तथाविध-स्त्रीलिङ्गशब्द-निवृत्त्यर्थमिति भावः ।

(२) अत्र अङ्गिरा नाम कश्चित् ।

(३) शिवादौ कुर्ष्यन्धकवृष्णय इत्युक्तेः ।

मन्वर्ज्जस्थानो वर्म्मणः उक्षाः स्यात् परस्थेनस्य अपत्यार्थ-ष्णे, अनो विकारार्थवर्जे ष्णे भावकर्म्मार्थवर्जे ये च, अध्वात्मनो-रीने, न-लोपो न स्यात्। याज्वनः भाद्रवर्म्मणः औक्ष्णः चाक्रिणः।

ग्रैवः वाशिष्ठः।

---

तयोर्यः अभावकर्म्मयः, पश्चात् अविकारष्णस्य अभावकर्म्मयस्य तस्तस्मिन्। याज्वनः इति—यज्वनोऽपत्यम् इत्यर्थे ष्णः न्वोर्लोपीती तेऽच्ये इति प्राप्तनलोपोऽनेन निषिध्यते। मन्वर्ज्ज इति किं? भाद्रसामः सौसामः। अपत्यष्ण इति किं? चर्म्मणा परिवृतो रथः चार्म्मणो रथः (१)। मन्वर्ज्जानित्युक्तेः वर्म्मणो वर्ज्जने प्राप्ते वर्म्मग्रहणादाह भाद्रवर्म्मणः इति—भद्रवर्म्मणोऽपत्यम् इति वाक्यम्। एवं शार्व्ववर्म्मण इत्यादि। औक्ष्ण इत्यादि—यद्यपि मन्वर्ज्जेत्यनेन नलोपप्रतिषेधादुक्ष्णोऽपि प्रतिषेधः सिध्यति, तथा-प्युक्ष्णः पृथग्ग्रहणमेवं ज्ञापयति, अपत्यष्णातिरिक्ते ष्णे नलोप-निषेधो न भवति, तेन औक्षं पदमित्यत्रानोऽविकारष्णे (२) निषेधो न स्यात्। चाक्रिण इति—चक्रिणोऽपत्यम् इति वाक्यं, स्येनो न नलोपः। अस्य सूत्रस्य योगविभागः कर्त्तव्यः, तेन क्वचिद-न्यत्रापि (३)। तथाहि—

---

(१) अत्र मनन्तत्वान्नलोपे प्राप्ते अपत्यार्थष्णाभावान्न नलोपः।

(२) औक्षमित्यत्र इदमर्थविहितष्णे इत्यर्थः।

(३) अप्रतिषिद्ध-नलोपोऽपि न स्यादिति शेषः।

ब्रह्मणो जातावपत्यष्णे । ब्रह्मणोऽपत्यष्णे नलोपो न स्यात् जातौ । ब्रह्मणोऽपत्यं ब्राह्मणो जातिः (१) । अपत्यष्ण इति किं ? ब्राह्मी नामौषधिजातिः । जातौ किं ? ब्रह्मणोऽपत्यं ब्राह्म इति ।

पणि गणि गाथि केशि विदथिनो वा तु हितनाम्नः । एषामपत्यष्णे नलोपो न स्यात् हितनाम्नस्तु वा । पणिनोऽपत्यं पाणिनः, एवं गाणिनः गाथिनः कैशिनः वैदथिनः । हितनाम्नोऽपत्यं हैतनाम्नः हैतनामः ।

इनोऽकलाप्यादेरनपत्ये । इनो नस्य लोपो न स्यात्, न तु कलाप्यादेः अनपत्यष्णे परे । स्राग्विणः मैधाविनः । अपत्ये तु मैधाव इत्यादि । कलाप्यादेस्तु कलापिन इदं कालापम् । कलाप्यादिर्यथा—

कलापी पीठसर्पी च कुथुमी तैतिली तथा ।
आजली लाङ्गली स्यात् सब्रह्मचारिशिखण्डिनौ ।
कलाप्यादौ शिलाली च नव शब्दाः प्रकीर्त्तिताः ॥

कर्म्मचर्म्मणोरताच्छील्यकोषयोः । ताच्छील्यभिन्ने कर्म्मणः कोषभिन्ने चर्म्मणो नलोपो न स्यादनपत्यष्णे । कार्म्मणं चार्म्मणम् । अताच्छील्यकोषयोरिति किम् ? कार्म्मः कर्म्मशीलः, चार्म्मः कोषः ।

दण्डिहस्तिनः ष्णायने, जिह्माशि-वासिनोस्तु ष्णेयष्णायन्योः । नलोपो न स्यात् । दण्डिनोऽपत्यं दाण्डिनायनः, एवं हास्तिनायनः । जैह्माशिनेयः वासिनायनिः ।

---

(१) अत्र मनन्तस्यापि अपत्यष्णे न नलोपः ।

अथर्व्वण: णिके। अथर्व्वणा कृतो ग्रन्थ: अथर्व्वा, तमधीते वेत्ति वा आथर्व्वणिक:।

शैव इत्यादि। शिवस्यापत्यमिति वाक्यम्।

शिवादिर्यथा—शिव तक्ष गङ्गा ककुभो मयूरो
वतण्ड भूमी मुनि सन्धि यस्का:।
पृथा विपाशा तृण कर्ण कुम्भा
मण्डूक वोधानभिमान चण्डा:॥
तृक्षाक खञ्जारक रेख कर्णा:
खञ्जालको लक्ष सुपिष्ट पीला:।
खदूरको भूरि नभाक पिष्टा:
पञ्जारको वृश्चिक कोकिलेला: (१)॥
पटको वर्त्तन: शोफी विरूपाक्ष: कलन्धन:।
मञ्जीरको जरत्कारू कह्लोड़ालेख (२) पीवरा:॥
अयस्थूणो वधिरक उत्केया प्रोष्ठ-वर्त्तुलौ।
कुक्षा जटिलको गोफिलिकोत्कुर्यौ भलन्दन:॥
खर्ज्जूरकोऽनभिम्लान: ककुत्स्थ: पौष्णिकस्तथा।
ऋष्टिषेण कुठारार्य्यश्वेता लोहितिकापि च॥
ऊर्णनाभश्चिपिटक: सपत्नी प्रोष्ठिकस्तथा।
त्वक्ष: साल्वा जलह्रद: कुबेर्य्यन्धकवृष्णय:॥
प्रवृद्धा मानुषी संज्ञा नदीसंज्ञा मता इह।
भारद्वाजे तु शुङ्ग: स्यादात्रेये च्छगलो मत:॥

---

(१) कोकिला, इला। (२) कह्लोड़, आलेख।

वात्स्ये विकर्णोऽथ शौरक्षदः परिषिकोऽपि च।
दशरथः कमीनश्च कन्यायाः ष्णो भवेत्तथा॥
त्रिवेण्यास्त्रिवणो विश्रवसस्तु रवणोऽपि च।
विश्रवणो मनोर्व्वा सन् गणसूत्रप्रमाणतः॥

इद्रादन्तानां पाठः ष्णिबाधनार्थः। हाजिकारान्तानां स्त्रीत्यान्तानाञ्च ष्णेयबाधनार्थः। तक्षन्—शब्दस्य कारुवाचकत्वात् ष्णिबाधनार्थः। तक्ष्णोऽपत्यं ताक्ष्णः, मनवर्ज्जान् इति अनन्तत्वात् नलोपो न स्यात्, कुर्व्वादित्वात् ताक्षण्यः। गङ्गाया अपत्यं गाङ्गः, अत्र्यादित्वात् गाङ्गेयः, तिकादित्वात् गाङ्गायनिः। पीलाया अपत्यं पैलः, अत्र्यादेराकृतिगणत्वात् पैलेयः। परे तु क्वचित् अपवादविषये उत्सर्गोऽभिनिविशत इति न्यायात् इत्याहुः। एवं साल्वाशब्दस्याप्युदाहरणीयम्। जरत्कारुशब्द उवन्तस्तन्वादिपाठात्। ऋष्टिषेणशब्दस्य सेनान्तत्वात् ण्यष्णि-बाधनार्थः। कुरुवंशोत्पन्ना ऋषिवाचका अन्धकवंशोपन्ना वृष्णि-वंशोत्पन्नाश्च सर्व्वे शिवादौ पठ्यन्ते। कुरोः—नाकुलः, साहदेवः। ऋषेः—मूले वाशिष्ठ इति—वशिष्ठस्यापत्यम् इति वाक्यम्, एवं वैश्वामित्रः। अन्धकस्य—श्वाफल्कः, तौवसः। वृष्णेः—वासुदेवः, आनिरुद्ध इत्यादि। ननु सर्व्वेषां व्याकरणानां माहेशमूलकत्वेनाधुनिककुर्वृष्ण्यन्धकवृष्णिवंशवाचकानां कथं शिवादौ पाठ इति चेत् सत्यं, शिवस्य सर्व्वज्ञत्वात् तत्र तेषां सङ्कलनम्। यद्वा ऋषेरनादित्वात् कुर्वृष्ण्यन्धकवृष्णिवंशा एवानादयः, अतएव तेभ्यस्त्यविधानमित्यदोषः। अवृद्धानां मानुषीसंज्ञानां तावत्—

| | | Rs. | As. |
|---|---|---|---|
| *Nirukta (2nd Edition) Vol. I. Fasc. 1 @ Rs. 1-4 | ... | 1 | 4 |
| *Nyāyavārtika, Fasc. 2--6 @ /10/ each | ... | 3 | 2 |
| Nityācārapaddhatiḥ, Fasc. 1--7 @ /10/ each | ... | 4 | 6 |
| Nityācārapradīpa Vol. I, Fasc. 1--8; Vol. II, Fasc. 1-4. @ /10/ each | ... | 7 | 8 |
| Nyayabinduṭikā Fasc. 1 @ /10/ each | ... | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. II, Fasc. 1--3 @ /10/ each | ... | 1 | 14 |
| Nyaya Vartika Tatparya Parisudhi, Fasc. 1-2 @ /10/ each | ... | 1 | 4 |
| Nyayasarah | ... | 2 | 0 |
| Padumawati, Fasc. 1-5 @ 2/ each | ... | 10 | 0 |
| Prākrita-Paingalam, Fasc. 1--7 @ /10/ each | ... | 4 | 6 |
| Parāçara Smṛti, Vol. I, Fasc. 2-8; Vol. II, Fasc. 1--6; Vol III, Fasc. 1--6 @ /10/ each | ... | 11 | 14 |
| Parāçara, Institutes of (English) @ 1/- each | ... | 1 | 0 |
| Pariksamukha Sutram | ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1--3 @ 1/4/ each | ... | 3 | 12 |
| Rasarnavam, Fasc. 1-3 | ... | 3 | 12 |
| Ravisiddhanta Manjari, Fasc. 1 | ... | 0 | 10 |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each | ... | 1 | 4 |
| Samaraicca Kaha Fasc. 1-5, @ /10/ each | ... | 3 | 2 |
| Sāṇkhya Sūtra Vṛtti, Fasc. 1--4 @ /10/ each | ... | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each | ... | 3 | 0 |
| Six Buddhist Nyaya Tracts. | ... | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each | ... | 3 | 12 |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each | ... | 1 | 0 |
| Suddhikaumudī, Fasc. 1-4 @ /10/ each | ... | 2 | 8 |
| Sundaranandam Kavyam | ... | 1 | 0 |
| Suryya Siddhanta Fasc. 1-2 @ 1-4 each | ... | 2 | 8 |
| Syainika Sastra | ... | 1 | 0 |
| *Taittreya Brahmana, Fasc. 11-25 @ /10/ each | ... | 9 | 6 |
| *Taitterīya Saṁhitā, Fasc. 27-45 @ /10/ each | ... | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc. 10-19 @ /10/ each | ... | 6 | 4 |
| Tantra Vārteka (English) Fasc. 1-10 @ 1/4/ each | ... | 12 | 8 |
| *Tattva Cintāmaṇi, Vol. I, Fasc 1-9, Vol II, Fasc 2-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each | ... | 23 | 12 |
| Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc. 1-6; Vol. | ... | 4 | 6 |
| Tattva Cintamani Didhiti Prakas, Fasc. 1-5, @ /10/ each, Fasc. 1, @ /10/ each | ... | 3 | 2 |
| Tattvārthadhigama Sutram, Fasc. 1-3 @ /10/ each | ... | 1 | 14 |
| Tirthacintamoni, Fasc, 1-3, @ /10/ each | ... | 1 | 14 |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each | ... | 1 | 14 |
| Tul'si Satsai, Fasc. 1--5 @ /10/ each | ... | 3 | 2 |
| *Upamita-bhava-prapañca-kathā, Fasc. 1-2, 5-13 @ /10/ each | ... | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1--6 @ 1/- each | ... | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ | ... | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1--6 @ /10/ each | ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3--6; Vol. II, Fasc. 1--7, @ /10/ each | ... | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1-8 Vol- II. Fasc. 1 @ /10/ each | ... | 5 | 10 |
| Ditto Vol. II, Fasc. 2-5 @ 1/4/ | ... | 5 | 0 |
| Vivādaratnākara, Fasc. 1--7 @ /10/ each | ... | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1--6 @ /10/ each | ... | | 12 |
| Yogasāstra Fasc. 1-3 | ... | | 12 |

*Tibetan Series.*

| | | | |
|---|---|---|---|
| Amarkosha | ... | | |
| Baudhastotrasangraha, Vol. I | ... | | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1--4 @ 1/- each | ... | | |
| Nyayabindu of Dharmakirti, Fasc. 1 | ... | | |
| Pag-Sam S'hi Ṭiñ, Fasc. 1--4 @ 1/- each | ... | | |
| Rtogs brjod dpag hkhri S'iñ (Tib. & Sans. Avadāña Kalpalatā Vo[l.] Fasc. 1--10; Vol. II. Fasc. 1--10 @ 1/- each | ... | | |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc 1- | | | |

*Arabic and Persian Series.*

| | | | |
|---|---|---|---|
| Āmal-i-Salih, or Shah Jahan Namah | ... | | |
| Al-Muqaddasi (English) Vol. I, Fasc. 1--4 @ 1/- each | ... | | |
| Āīn-i-Akbarī, Fasc. 1-22 @ 1/8/ each | ... | | |
| Ditto (English) Vol. II, Fasc. 1-5 Vol. III, Fa[sc.] Index to Vol. II, @ 2/- each | ... | | |
| Akbarnāmah, with Index, Fasc. 1--37 @ 1/8/ each | ... | | |
| Akbarnāmah, English Vol. I, Fasc. 1--8; Vol. II, Fasc. 1--7, Vol. Fasc. 1--2 @ 1/4/ each | ... | | |
| Arabic Bibliography, by Dr. A. Sprenger, @ /10/ | ... | | |
| Conquest of Syria, Fasc. 1-9 @ /10/ each | ... | | |
| Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each | ... | | |

*The other Fasciculi of these works are out of stock an[d] [cannot] be supplied.